॥ कल्किस्तवः अथवा दशावतारस्तवः ॥

श्रीगणेशाय नमः ।
राजान ऊचुः । गद्यानि । जय जय निजमायया
कल्पिताशेषविशेषकल्पनापरिणामजलाप्लुतलोकत्रयोपकारणमाकलयमनुमनिशम्य
पूरितमविजनाविजनाविर्भूतमहामीनशरीर त्वं
निजकृतधर्मसेतुसंरक्षणकृतावतारः ॥ १॥

पुनरिह जलधिमथनादृतदेवदानवगणानां
मन्दराचलानयनव्याकुलितानां साहाय्येनादृतचित्तः ।
पर्वतोद्धरणामृतप्राशनरचनावतारः कूर्माकारः प्रसीद
परेश त्वं दीननृपाणाम् ॥ २॥

पुनरिह दितिजबलपरिलंघितवासवसूदनादृत
जितभुवनपराक्रमहिरण्याक्षनिधन
पृथिव्युद्धरणसङ्कल्पाभिनिवेशेन धृतकोलावतार पाहि नः ॥ ३॥

पुनरिह त्रिभुवनजयिनो महाबलपराक्रमस्य
हिरण्यकश्यपोरर्दितानां देववराणां भयभीतानां
कल्याणाय दितिसुतवधप्रेप्सुर्ब्रह्मणो वरदानादवध्यस्त न
शस्त्रास्त्रारात्रिदिवास्वर्गमर्त्यपातालतले
देवगन्धर्वकिन्नरनरनागैरिति विचिन्त्य नरहरिरूपेण
नखाग्रभिन्नोरुं दष्टदन्तच्छदं त्यक्तासुं कृतवानसि ॥ ४॥

पुनरिह त्रिजगज्जयिनो बलेः सत्रे शक्रानुजो बटुवामनो
दैत्यसंमोहनाय त्रिपदभूमियाञ्चाच्छलेन
विश्वकायस्तदुत्सृष्टजलसंस्पर्शविवृद्धमनोऽभिलाषस्त्वं
भूतले बलेर्दौवारिकत्वमङ्गीकृतमुचितं दानफलम् ॥ ५॥

पुनरिह हैहयादिनृपाणाममितबलपराक्रमाणां
नानामदोल्लंघितमर्यादावर्त्मनां निधनाय भृगुवंशजो
जामदग्न्यः पितृहोमधेनुहरणप्रवृद्धमन्युवशात्
त्रिःसप्तकृत्वो निःक्षत्रियां पृथिवीं कृतवानसि
परशुरामावतारः ॥ ६॥

पुनरिह पुलस्त्यवंशावतंसस्य विश्रवसः पुत्रस्य
निशाचरस्य रावणस्य लोकत्रयतापनस्य निधनमुररीकृत्य
रविकुलजातदशरथात्मजो विश्वामित्रादस्त्राण्युपलभ्य वने

सीताहरणवशात्प्रवृद्धमन्युनाऽम्बुधिंवानरैर्निबध्य
सगणं दशकन्धरं हतवानसि रामावतारः ॥ ७॥

पुनरिह यदुकुलजलधिकलानिधिः
सकलसुरगणसेवितपादारविन्दद्वन्द्वो
विविधदानवदैत्यदलनलोकत्रयदुरिततापनो वसुदेवात्मजो
कृष्णावतारो बलभद्रस्त्वमसि ॥ ८॥

पुनरिह विधिकृतवेदधर्मानुष्ठानविहितनानादर्शनसंघृणः
संसारकर्मत्यागविधिना ब्रह्माभासविलासचातुरीं
प्रकृतिविमाननामसम्पादयन् बुद्धावतारस्त्वमसि ॥ ९॥

अधुना कलिकुलनाशावतारो बौद्धपाषण्डम्लेंच्छादीनां च
वेदधर्मसेतुपरिपालनाय कृतावतारः कल्किरूपेणास्मान्
स्त्रीत्वनिरयादुद्धृतवानसि तवानुकम्पां किमिह कथयाम् ॥ १०॥

क्व ते ब्रह्मादीनामविजितविलासावतरणं क्व नः
कामवामाकलितमृगतृष्णार्तमनसाम् सुदुष्प्राप्यं
युष्मच्चरणजलजालोकनमिदं कृपापारावारः
प्रमुदितदृशाऽऽश्वासय निजान् ॥ ११॥

इति श्रीकल्किपुराणेऽनुभागवते भविष्ये द्वितीयांशे
नृपकृतकल्किस्तव सम्पूर्णः ॥